भास्करोदयाख्यव्याख्या

त्रिभ्वनर्गलसामर्थ्यं सिद्धम् । **श्रीरामभट्टतनूजः ।** सा हि श्रीरमृतासतामिति श्रुतिबोधितवेदत्रयीरूपश्रीसहितत्वमत्र विवक्षितम् । भट्टत्वं वेदशास्त्रार्थतत्वज्ञत्वम् तादृशरामनामकस्य तनूजः सूनुः तेनानूचानपाण्डित्यं सिद्धम् । **श्रीनीलकण्ठभट्टः ।** तथाविधश्रीसाहित्यविशिष्टस्तथाविधभट्टत्वविशिष्टश्च नीलकण्ठशर्मा ग्रन्थकारः । **विदुषा** । वेदवेदाङ्गनिखिलतन्त्रसिद्धान्तज्ञानजनितानेकग्रन्थसन्दर्भरचनाधायककल्पनाविशेषवता **रचितः** निर्मितः **तर्कसंग्रहदीपिकाप्रकाशः ।** तर्कसंग्रहस्य व्याख्यानं दीपिका तद्व्याख्यानं प्रकाशः प्रकाशनामको ग्रन्थः समाप्तः चरमवर्णध्वंसवानित्यर्थ इति शिवम् ॥

नीलकण्ठप्रसादेन नीलकण्ठतनूद्भवः ।
निर्मायप्रार्पयद्ग्रन्थं नीलकण्ठाय मङ्गलम् ॥ १ ॥

श्रीमत्पण्डितमण्डलीकुमुदिनीराकासुधादीधितेः
पुत्रस्तस्य च नीलकण्ठविदुषो लक्ष्मीनृसिंहाभिधः ॥
श्रीमत्तातविनिर्मितां कृतिमिमां व्याख्यातवान्मञ्जुकाम्
तेन स्यान्मुदितो हिमाचलसुतावामार्धदेहः शिवः ॥ २ ॥

श्रीदीपिकाप्रकाशस्य व्याख्यानं भास्करोदयम् ।
शिवप्रेरितशेमुष्या प्राकरोद्विदुषां मुदे ॥ ३ ॥

श्रीमद्दक्षिणामूर्त्तिप्रसादलब्धानवद्यनिखिलवेदशाखामुखसर्वतन्त्रस्वतन्त्रस्यानल्पान्तेवासिपश्चास्यजितदिङ्मण्डलविद्वद्गजविविधग्रन्थनिबन्धनपटुतरसिद्धान्तपारीणकुशलपण्डितमण्डलविकचकुमुद्वतीकुमुद्वतीरमणायमानाद्वैतज्ञानामृतोद्गारधारासंपातनिरन्तरविडम्बितप्रावृषेण्यवारिवाहव्यूहमहामहोपाध्यायश्रीनीलकण्ठभट्टचरणकमलध्यानावलब्धसन्मतिकतत्सूनुसूरिश्रीलक्ष्मीनृसिंहविरचिता तर्कसंग्रहदीदिकाप्रकाशव्याख्या भास्करोदयाख्या श्रीनीकण्ठस्य प्रीतये संभूयात् ॥ शुभमस्तु ॥

श्रीगुरोर्नीलकण्ठस्य चरणौ मूर्ध्नि धारयन् ।
भूयात्संप्रार्थये शश्वद्व्याख्या मोदाय धीमताम् ॥ १ ॥
मक्षिका मधुलोभेन पुष्पेभ्यो मधु पुष्कलम् ।
कुर्वन्ति संचयं स्वार्थं भुङ्क्ते भाग्यात्परो जनः ॥ २ ॥
मात्सर्यं तु समुत्सार्य सान्तं स्वालोक्य सद्बुधाः ।
दूष्यं चेद्दूष्यतां तच्चित्तुष्यतां वा न मे भिदा ॥ ३ ॥

श्रीपूलश्रीमिथिलेशसत्कृतबलोदर्कप्रतिष्ठान्वित-
श्रीमद्गोकुलनाथशर्मतनुजः श्रीमान् सनाथोऽभवत्
यो विद्वानखिलं विनश्वरमिदं श्री १०८ मत्परे ब्रह्मणि
विन्यस्याखिलभावमाशु विजहावर्थे ममत्वं दृढम् ॥ १ ॥

१ अप्रतिबद्धबुद्धिमत्त्वम् ।

भास्करोदयाख्यव्याख्या

पुत्रा वेदमिताः परैरनमिताः सन्नीतिनिष्ठाविदः
तस्यासन् मिथिलेशलब्धविभवा दानप्रतिष्ठान्विताः ।
तेषां च ह्यनुजोऽनुजाश्रितपदः श्रीमाञ्छिवाराधकः
भोलानाथ इतीदृशीमलभताभिख्यां दयाख्यातिमान् ॥ २ ॥

तत्सूनुर्मिथिलामहीन्द्रतनुज—श्री ५ मद्गुणेशाभिध-
प्रोद्यत्सद्यशसाश्रितः करमहावंशाम्बुधीन्दुर्महान् ।
प्रह्लादं जनयन्प्रभोर्निजकृतौ दाक्ष्यं च सन्दर्शयन्
श्री १०८ मत्कृष्णपदाब्जसेवनपरः श्रीनन्दलालोऽभवत् ॥ ३ ॥

तत्सूनुर्निजतातपादयुगलानुध्यानविध्मातधीः
व्याकृत्यादिविदग्रणीः समभवच्छ्रीमान्मुकुन्दः सुधीः ।
सम्राडर्पितसत्प्रशस्तिक इमां श्रीनीलकण्ठात्मजै-
र्निर्मातुं प्रकृतां क्वचित्क्वचिदसंपूर्णां समापूरयत् ॥ ४ ॥

श्रीमद्वैक्रमवत्सरे नवशराङ्कक्ष्मा १९५९ मिते माधवे
वारे देवगुरोरियं वदि तिथौ के २ पूर्तिमापादिता ।
एनामाकलयन्तु धीरधीषणा व्याख्यां तु चाशु स्फुटं
श्रीमत्पण्डितनीलकण्ठरचितां टीकां प्रकाशाभिधाम् ॥ ५ ॥